# उपनयन-
# ...द्यारम्भ पद्धति



सम्पादक

पं० गंगा प्रसाद उपाध्याय,
पं० सत्यव्रत उपाध्याय

ओ३म्

# वैदिक उपनयन-वेदारम्भ पद्धति




सम्पादक

पं० गंगा प्रसाद उपाध्याय, एम. ए.

प्रणेता :—आस्तिकवाद, विधवा-विवाह मीमांसा, आर्य्य-समाज, ट्रैक्ट माला, सर्व-सिद्धान्त संग्रह, अद्वैतवाद, धम्म पद, महिला व्यवहार चन्द्रिका, समाज सुधार, अँग्रेज़ जाति का इतिहास, हिन्दी शेक्सपियर (छः भाग) आदि आदि।

तथा

पं० सत्यव्रत उपाध्याय, बी. ए., एल-टी.



प्रकाशक

ट्रैक्ट विभाग आर्य्य समाज चौक, प्रयाग

प्रथम बार ]  सन् १९३० ई०  [ मूल्य ✓)



# सम्पादन हेतु

कुछ दिन हुये वैदिक-विवाह-पद्धति बनाई गई थी। इसकी विशेषता यह है कि प्रत्येक कृत्य को अलग २ छाँट दिया गया है और जो मंत्र जहाँ बोलना चाहिये वह वहीं लिख दिया गया है। इससे उन संस्कार कराने वालों को जो विशेषज्ञ नहीं हैं संस्कार कराने में सहायता मिलती है। इस पुस्तक को पत्र-सम्पादकों तथा अन्य सज्जनों ने बहुत पसन्द किया।

उसी शैली पर उपनयन तथा वेदारम्भ पद्धति का सम्पादन किया गया है।

यह पद्धतियां महर्षि दयानन्द की संस्कार विधि के आधार पर रची गई हैं। जो विशेषज्ञ अधिक जानना चाहें या किसी त्रुटि या अशुद्धि का अनुभव करें वह मूल संस्कार विधि को देखने की कृपा करें।



ओ३म्

# वैदिक उपनयन-वेदारम्भ-पद्धति

—*❀*—

## उपनयन संस्कार के दो अंग

१—यज्ञोपवीत

२—वेदारम्भ (सावित्री मंत्र पाठ)

आवश्यक वस्तु :—सामान्य यज्ञ के लिये सामग्री, घृत आदि।

१—यज्ञोपवीत—

धोती, लंगोट, अंगोछा पीला रंगा हुआ, जनेऊ। व्रत के लिये (३ दिन अथवा १ दिन) दूध या फल। १ लोटा पानी, परात या थाली।

२—वेदारम्भ (उपनयन के बाद)—यज्ञोपवीत संस्कार की वस्तुओं के अतिरिक्त, भात, विशेष समिधायें ६, १ दण्ड।

मेखला—मूंज, तृण, ऊन वा सन की; खड़ाऊं, आसन।

आवश्यक जन—यजमान, बालक, पुरोहित आदि।

आसन—यजमान तथा बालक का पश्चिम में पूर्वाभिमुख अथवा दक्षिण में उत्तराभिमुख, । आचार्य का दक्षिण में उत्तराभिमुख।

## [ १ ली क्रिया—पुरोहित वरण ]

यजमान :—ओमावसोः सदने सीद ।

पुरोहित वा आचार्य :—ओं सीदामि ।

यजमान—ओं ब्रह्मणो द्वितीये प्रहरार्धे वाराहकल्पे सप्तमे मन्वन्तरे वैवस्वते अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे अमुक विक्रमे अमुक शाके अमुक दयानन्दाब्दे अमुक मासे अमुक पक्षे अमुक तिथौ अमुक दिने अमुक ग्रामे, नगरे वा अमुक गोत्रोत्पन्नः अमुक नामाहं स्वबालक यज्ञोपवीत संस्कार करणाय भवन्त वृणे ।

आचार्य—ओं वृतोऽस्मि ।

## [ २ री क्रिया—आचमन ]

ओं अमृतोपस्तरणमसि स्वाहा ॥ इस से एक ।

ओं अमृता पिधानमसि स्वाहा ॥ इस से दूसरा ।

ओं सत्यं यशः श्रीर्मयि श्रीः श्रयतां स्वाहा ॥ इस से तीसरा ।

## [ ३ री क्रिया-मार्जन ]

वाम हाथ मे पानी लेकर दक्षिण हाथ से स्पर्श

ओं वाङ्म आस्येऽस्तु ॥ इस से मुख ।

ओं नसोर्मे प्राणोऽस्तु ॥ इस से दोनें नासिका छिद्र ।

ओं अक्ष्णोर्मे चक्षु रस्तु ॥ इस से दोनों आंखें ।

ओं कर्णयोर्मे श्रोत्रमस्तु ॥ इस से दोनें कान ।

ओं बाह्वोर्मे बलमस्तु ॥ इस से दोनों बाहु ।

ओं ऊर्वोर्मे ओजोऽस्तु ॥ इस से दोनों जांघ ।

ओं अरिष्टानि मेऽङ्गानि तनूस्तन्वामे सहसन्तु ॥

इससे सब शरीर ।

## [ ४ थी क्रिया—वस्त्र धारण ]

बालक :—ब्रह्मचर्यमागाम् , ब्रह्मचार्यसानि ।

आचार्य :—निम्नलिखित मंत्र बोल कर बालक को सुन्दर वस्त्र और उपवस्त्र देवे ( धोती, अंगोछा )

ओं येनेन्द्राय बृहस्पति र्वासः पर्यदधात्सृतम् । तेन त्वा परिदधाम्यायुषे दीर्घायुत्वाय बलाय वर्चसे ॥

## [ ५ वीं क्रिया—यज्ञोपवीत ]

आचार्य :—यज्ञोपवीत ( जोड़ा नहीं, केवल एक ) हाथ में लेकर । निम्नलिखित [illegible]

ओं यज्ञोपवीतं, परमं पवित्रं प्रजापतेर्यत्-सहजं पुरस्तात् । आयुष्य मग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ यज्ञोपवीतमसि यज्ञस्य त्वा यज्ञोपवीतेनोपनह्यामि ॥

## [ ६ ठी क्रिया—प्रार्थना ]

ओ३म् विश्वानि देव सवितर्दुरितानि परासुव ।
यद्भद्रन्तन्न आसुव ॥ १ ॥
हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत् ।
सदाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ २ ॥
य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः ।
यस्य च्छायाऽमृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम ॥३॥
यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव ।
य ईशेऽअस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥४॥
येन द्यौरुग्रा पृथिवी च दृढा येन स्वः स्तभितं येन नाकः ।
यो अन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम ॥५॥
प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव ।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ॥६॥

स नो बन्धुर्जनिता स विधाता धामानि वेदभुवनानि विश्वा ।
यत्र देवा अमृतमानशानास्तृतोये धामन्नध्यैरयन्त ॥७॥
अग्ने नय सुपथा राये अस्मान विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नम उक्तिं विधेम ॥८॥

## ( ७ वीं क्रिया—स्वस्तिवाचन )

अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम् होतारं रत्नधातमम् ॥१॥
सनः पितेव सूनवेऽग्ने सूपायनो भव । सचस्वा नः स्वस्तये ॥२॥
ऋ० मं० १ । सू० १ मं० १ । ९ ॥

स्वस्ति नो मिमीतामश्विनाभगः स्वस्ति देव्यदितिरनर्वणः ।
स्वस्ति पूषा असुरो दधातु नः स्वस्ति द्यावा पृथिवी सुचेतुना ॥३॥
स्वस्तये वायुमुपब्रवामहै सोमं स्वस्ति भुवनस्य यस्पतिः ।
बृहस्पतिं सर्वगण स्वस्तये स्वस्तय आदित्यासो भवन्तु नः ॥४॥
विश्वेदेवा नो अद्या स्वस्तये वैश्वानरो वसुरग्निः स्वस्तये ।
देवा अवन्त्वृभवः स्वस्तये स्वस्ति नो रुद्रः पात्वंहसः ॥ ५ ॥
स्वस्ति मित्रा वरुणा स्वस्ति पथ्ये रेवति ।
स्वस्ति न इन्द्रश्चाग्निश्च स्वस्तिनो अदिते कृधि ॥ ६ ॥
स्वस्ति पन्थामनुचरेम सूर्य्याचन्द्रमसाविव ।
पुनर्ददता घ्नता जानता संगमेमहि ॥ ७ ॥ ऋ० मं० ५ सू० ५१ ।
ये देवानां यज्ञिया यज्ञियानां मनोर्यजत्रा अमृता ऋतज्ञाः ।
ते नो रासन्तामुरुगायमद्य यूयं पात स्वस्तिभिः सदा नः ॥ ८ ॥
ऋ० मं० ७ । सू० ॥ ३६ ॥

येभ्योमाता मधुमत्पिन्वते पयः पीयूषं द्यौरदितिरद्रिवर्हाः ।
उक्थशुष्मान् वृषभरान्त्स्वप्नसस्ताँ आदित्याँ अनुमदास्वस्तये ॥ ९ ॥

नृचक्षसो अनिमिषन्तो अर्हणा बृहद्देवासो अमृतत्वमानशुः ।
ज्योतीरथा अहिमाया अनागसो दिवो वर्ष्माणं वसते स्वस्तये ॥१०॥

सम्राजो ये सुवृधो यज्ञमाययुरपरिह्वृता दधिरे दिवि क्षयम् ।
तां आ विवास नमसा सुवृक्तिभिर्महो आदित्याँ अदितिं स्वस्तये।। ११।।
को वः स्तोमं राधति यं जुजोषथ विश्वेदेवासो मनुषो यतिष्ठन।
को वोऽध्वरं तुविजाता अरं करद्यो नः पर्षदत्यंहः स्वस्तये ।।१२।।
येभ्यो होत्रां प्रथमामायेजे मनुः समिद्धाग्निर्मनसा सप्तहोतृभिः ।
त आदित्या अभयं शर्म यच्छत सुगानःकर्त सुपथा स्वस्तये ।।१३।।
य ईशिरे भुवनस्य प्रचेतसो विश्वस्य स्थातुर्जगतश्च मन्तवः ।
तेनः कृतादकृतादेनसस्पर्यद्यादेवासः पिपृता स्वस्तये ।। १४ ।।
भरेष्विन्द्रं सुहवं हवामहेंऽहोमुचं सुकृतं दैव्य जनम् ।
अग्निं मित्रं वरुणं सातये भगं द्यावापृथिवी मरुतः स्वस्तये ।। १५ ।।
सुत्रामाणं पृथिवीं द्यामनेहसं सुशर्माणमदितिं सुप्रणीतिम् ।
दैवीं नावं स्वरित्रामनागसमस्रवन्तीमारुहेमा स्वस्तये ।। १६ ।।
विश्वे यजत्रा अधिवोचतोतये त्रायध्वं नो दुरेवाया अभिहुतः ।
सत्यया वो देवहूत्या हुवेम शृण्वतो देवा अवसे स्वस्तये ।। १७ ।।
अपामीवामप विश्वामनाहुतिमपारातिं दुर्विदत्रामघायतः ।
आरे देवा द्वेषो अस्मद्युयोतनोरुणः शर्म यच्छता स्वस्तये ।। १८ ।।
अरिष्टः स मर्तो विश्वएधते प्र प्रजाभिर्जायते धर्मणस्परि ।
यमादित्यासो नयथासुनीतिभिरतिविश्वानि दुरिता स्वस्तये ।।१९।।
यं देवासोऽवथ वाजसातौ यं शूरसाता मरुतो हि ते धने ।
प्रातर्यावाणं रथमिन्द्रसानसि मरिष्यन्तमा रुहेमा स्वस्तये ।।२०।।
स्वस्ति नः पथ्यासु धन्वसु स्वस्त्यप्सु वृजने स्वर्वति ।
स्वस्तिनः पुत्रकृथेषु योनिषु स्वस्ति राये मरुतो दधातन ।।२१।।
स्वस्ति रिद्धि प्रपथे श्रेष्ठा रेक्ण स्वस्त्यभि या वाममेति ।
सा नो अमासो अरणे निपातु स्वावेशा भवतु देवगोपाः ।।२२।।
ऋ० मं० १० सू० ६३ ।।१६।।

इषे त्वोर्ज्जे त्वा वायवस्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्म्मणऽआप्यायध्वमघ्न्या इन्द्राय भागं प्रजावतीरनमीवा अयक्ष्मा मा वस्तेन ईशत माघशꣳसो ध्रुवा अस्मिन् गोपतौ स्यात बह्वीर्यजमानस्य पशून् पाहि ॥२३॥ यजु० अ० १ । मं० १ ॥

आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासो अपरीतास उद्भिदः । देवा नो यथा सदमिद्वृधेऽअसन्नप्रायुवो रक्षितारो दिवेदिवे ॥२४॥

देवानां भद्रा सुमतिर्ऋजूयतां देवानाꣳ रातिरभि नो निवर्त्तताम् । देवानाꣳसख्यमुपसेदिमा वयं देवा न आयुः प्रतिरन्तु जीवसे ॥२५॥

तमीशानं जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयम् । पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये ॥२६॥

स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥२७॥

भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवा ꣳ सस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥२८॥ यजु० अ० २५ । मं० १४ । १५ । १८ । १९ । २१ ॥

अग्न आयाहि वीतये गृणानो हव्यदातये निहोता सत्सि बर्हिषि॥२९॥

त्वमग्ने यज्ञाना ꣳ होता विश्वेषा ꣳ हितः । देवेभिर्मानुषे जने ॥३०॥ सा० वे० प्रपा० १ । मं० १ । २ ॥

ये त्रिषप्ताः परियन्ति विश्वा रूपाणि बिभ्रतः । वाचस्पतिर्बला तेषां तन्वो अद्य दधातु मे ॥ ३१ ॥ अथर्व० कां० १ सू० १ । वर्ग १ अनु० १ । प्रपा० १ मं० १ ॥

## [ ८ वीं क्रिया–शान्ति प्रकरणम् ]

ॐ शं न इन्द्राग्नी भवतामवोभिः शन्न इन्द्रावरुणा रातहव्या । शमिन्द्रासोमा सुविताय शंयोः शन्नइन्द्रा पूषणा वाजसातौ ॥१॥

शंनो भगः शमुनः शंसोअस्तु शं नः पुरन्धिः शमु सन्तु रायः । शं नः सत्यस्य सुयमस्य शंसः शन्नो अर्य्यमा पुरुजातो अस्तु ॥२॥

शं नो धाता शमु धर्त्ता नो अस्तु शं न उरूची भवतु स्वधाभिः ।
शं रोदसी बृहती शं नो अद्रिः शं नो देवानां सुहवानि सन्तु ॥३॥

शं नो अग्निर्ज्योतिरनीको अस्तु शं नो मित्रा वरुणावश्विना शम् ।
शं नः सुकृतां सुकृतानि सन्तु शं न इषिरो अभिवातु वातः ॥४॥

शं नो द्यावापृथिवी पूर्वहूतौ शमन्तरिक्षं दृशये नो अस्तु ।
शं न ओषधीर्वनिनो भवन्तु शं नो रजसस्पतिरस्तु जिष्णुः ॥५॥

शन्न इन्द्रो वसुभिर्देवो अस्तुशमादित्येभिर्वरुणः सुशंसः ।
शं नो रुद्रो रुद्रेभिजलाषः शं नस्त्वष्टाग्नाभिरिह शृणोतु ॥ ६ ॥

शं नः सोमो भवतु ब्रह्म शंनः शंनो ग्रावाणः शमु सन्तु यज्ञाः ।
शं नः स्वरूणां मितयोभवन्तु शं नः प्रस्वः शम्वस्तुवेदिः ॥ ७ ॥

शं नः सूर्य उरुचक्षा उदेतु शं नश्चतस्रः प्रदिशो भवन्तु ।
शं नः पर्वता ध्रुवयो भवन्तु शं नः सिन्धवः शमु सन्त्वापः ॥ ८ ॥

शं नो अदितिर्भवतु व्रतेभिः शंनो भवन्तु मरुतः स्वर्काः ।
शं नो विष्णुः शमु पूषा नो अस्तु शं नो भवित्रं शम्वस्तु वायुः॥ ९ ॥

शं नो देवः सविता त्रायमाणः शं नो भवन्तूषसो विभातीः ।
शं नः पर्जन्यो भवतु प्रजाभ्यः शं नः क्षेत्रस्य पतिरस्तु शम्भुः ॥१०॥

शं नो देवा विश्वदेवा भवन्तु शं सरस्वती सह धीभिरस्तु ।
शमभिषाचः शमु रातिषाचः शं नो दिव्याः पार्थिवाः शं नो अप्याः ॥ ११ ॥

शं नः सत्यस्य पतयो भवन्तु शं नो अर्वन्तः शमु सन्तु गावः ।
शं न ऋभवः सुकृतः सुहस्ताः शं नो भवन्तु पितरो हवेषु ॥ १२ ॥

शं नो अज एकपाद्देवो अस्तु शं नोऽहिर्बुध्न्यः शं समुद्रः ।
शं नो अपां नपात्पेरुरस्तु शं नः पृश्निर्भवतु देवगोपाः ॥ १३ ॥
ऋ० मं० ७ । सू० । ३५ । मं० १-१३ ॥

इन्द्रो विश्वस्य राजति शं नो अस्तु द्विपदे शं चतुष्पदे ॥ १४ ॥

शं नो वातः पवताꣳ शं नस्तपतु सूर्य्यः । शं नः कनिक्रदद्देवः पर्जन्यो अभिवर्षतु ॥ १५ ॥

अहानि शं भवन्तु नः शꣳ रात्रीः प्रतिधीयताम् । शं न इन्द्राग्नीभवतामवोभिः शं न इन्द्रावरुणा रातहव्या । शन्न इन्द्रापूषणा वाजसातौ शमिन्द्रासोमा सुविताय शं योः ॥ १६ ॥

शं नो देवीरभीष्टयआपो भवन्तु पीतये । शंयो रभिस्रवन्तु नः ॥ १७ ॥

द्यौः शांतिरन्तरिक्षꣳ शान्तिः पृथिवी शांतिरापःशान्तिरोषधयः शांतिः । वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः सर्वꣳ शान्तिः शान्तिरेव शान्तिः सामा शान्तिरेधि ॥ १८ ॥

तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतं जीवेम शरदः शतꣳ शृणुयाम शरदः शतं प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात् ॥ १९ ॥ यजुः० अ० ३६ मं० । १० । ११ । १२ । १७ । २४ ॥

यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवैति । दूरङ्गमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसंकल्पमस्तु ॥ १ ॥

येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः । यदपूर्वं यक्षमन्तः प्रजानां तन्मे मनः शिवसंकल्पमस्तु ॥ २ ॥

यत्प्रज्ञानमुतचेतो धृतिश्च यज्ज्योतिरन्तरमृतं प्रजासु । यस्मान्न ऋते किंचन कर्म क्रियते तन्मे मनः शिवसंकल्पमस्तु ॥ ३ ॥

येनेदं भूतं भुवनं भविष्यत्परिगृहीतममृतेन सर्वम् । येन यज्ञस्तायते सप्तहोता तन्मे मनः शिवसंकल्पमस्तु ॥ ४ ॥

यस्मिन्नृचः सामयजूꣳषि यस्मिन्प्रतिष्ठिता रथनाभाविवाराः । यस्मिँश्चित्तꣳ सर्वमोतं प्रजानां तन्मे मनः शिवसंकल्पमस्तु ॥ ५ ॥

सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेऽभीशुभिर्वाजिन इव। हृत्प्रतिष्ठं यदजिरं जविष्ठं तन्मे मनः शिवसंकल्पमस्तु ॥ ६ ॥ य० । अ० ३४ । मं० १-६ ॥

स नः पवस्व शं गवे शं जनाय शमर्वते । शꣳराजन्नोषधीभ्यः ॥ २६ ॥ साम० उत्तरार्चि के० प्रपा० १ । मं० ३ ॥

अभयं नः करत्यन्तरिक्षमभयं द्यावा पृथिवी उभे इमे । अभयं पश्चादभयं पुरस्तादुत्तरादधरादभयं नो अस्तु ॥ २७ ॥

अभयं मित्रादभयममित्रादभयं ज्ञातादभयं परोक्षात् । अभयं नक्तमभयं दिवा नः सर्वा आशा मम मित्रं भवन्तु ॥ २८ ॥ अथर्व कां० १९ ॥ सू० १५ । मं० ५ । ६ ॥

## ( ९ वीं क्रिया-अग्नि जलाना )

ओं भूर्भुवः स्वः । ( इससे कपूर जलाना )

ओं भूर्भुवः स्वर्द्यौरिव भूम्ना पृथिवीव वरिम्णा तस्यास्ते पृथिवि देवयजनि पृष्ठेऽग्निमन्नादमन्नाद्यायादधे ॥ ( इस से खड़े होकर अग्नि कुण्ड में रखना । )

फिर अगले मंत्र से पंखा से खड़े हुये अग्नि प्रदीप्त करना ।

ओ३म् उद्बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्ते सꣳसृजेथामयञ्च । अस्मिन्त्सधस्थे अध्युत्तरस्मिन् विश्वेदेवा यजमानश्च सीदत ।

## ( १० वीं क्रिया—घृत में भीगी समिधायें रखना )

ओ३म् समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम् । आस्मिन् हव्या जुहोतन स्वाहा ॥ इदमग्नये इदन्न मम । इससे एक

ओ३म सुसमिद्धाय शोचिषे घृतं तीव्रं जुहोतन । अग्नये जातवेदसे स्वाहा ॥ इदमग्नये जातवेदसे, इदन्न मम ॥ इससे दूसरी

ओं तन्त्वा समिद्भिरङ्गिरो घृतेन वर्द्धयामसि । बृहच्छोचायविष्ठ्य स्वाहा ॥ इदमग्नयेऽङ्गिरसे, इदन्न मम ॥ इससे तीसरी

( ११ वीं क्रिया-पांच घृत की आहुतियां पांच वार इस मंत्र को पढ़ कर )

ओ३म् अयन्त इध्म आत्मा जातवेदस्तेनेध्यस्व वर्द्धस्व चेद्धवर्धय चास्मान् प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहा ॥ इदमग्नये जातवेदसे, इदन्न मम ॥

१२ वीं क्रिया-जल लेके वेदी के चारों ओर जल छिड़कना

ओ३म् अदितेऽनुमन्यस्व ॥ इससे पूर्व

ओ३म् अनुमतेऽनुमन्यस्व ॥ इससे पश्चिम

ओं सरस्वत्यनुमन्यस्व ॥ इससे उत्तर

ओं देव सवितः प्रसुव यज्ञं प्रसुव, प्रज्ञपतिं भगाय दिव्यो गन्धर्वः केतपूः केतन्नः पुनातु वाचस्पतिर्वाचन्नः स्वदतु ॥ इससे चारों ओर—

( १३ वीं क्रिया-घृत की आहुतियां )

ओ३म् अग्नये स्वाहा इदमग्नये । इदन्न मम

इससे वेदी के उत्तर भाग में प्रज्वलित अग्नि पर । और एक बूँद आहुति देने के बाद प्रोक्षणी पात्र में—

ओं सोमाय स्वाहा, इदं सोमाय, इदन्न मम ॥

इससे दक्षिण भाग में दूसरी—

ओं प्रजापतये स्वाहा । इदं प्रजापतये, इदन्न मम ॥

ओं इन्द्राय स्वाहा । इदमिन्द्राय, इदन्न मम ॥

इन दोनों से बीच में ।

फिर और घृत को आहुति निम्नलिखित मंत्रों से देनी ।

ओ३म् भूरग्नये स्वाहा । इदमग्नये इदन्न मम ।

ओं भुवर्वायवे स्वाहा । इदं वायवे इदन्न मम ।

ओं स्वरादित्याय स्वाहा । इदमादित्याय, इदन्न मम ।

ओं भूर्भुवः स्वरग्निवाय्वादित्येभ्यः स्वाहा । इदमग्निवाय्वादित्येभ्यः । इदन्न मम ।

ओं त्वन्नो अग्ने वरुणस्य विद्वान् देवस्य हेडोऽवयासिसीष्ठाः । यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्रमुमुग्ध्यस्मत् स्वाहा ॥ इदमग्नीवरुणाभ्यां, इदन्न मम ॥ १ ॥

ओं सत्वन्नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ । अव यक्ष्वनो वरुणं रराणो वीहि मृडीकं सुहवो न एधि स्वाहा । इदमग्नीवरुणाभ्यां इदन्न मम ॥ २ ॥

ओं इमं मे वरुण श्रुधी हवमद्या च मृडय । त्वामवस्युराचके स्वाहा । इदं वरुणाय, इदन्न मम ॥ ३ ॥

ओं तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेडमानो वरुणेह बोध्युरुशंसमान आयुः प्रमोषीः स्वाहा । इदं वरुणाय इदन्न मम ॥ ४ ॥

ओं येते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः । तेभिर्नोऽअद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा । इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्य :—इदन्न मम ॥ ५ ॥

ओं अयाश्चाग्नेऽस्यनभिशस्तिपाश्च सत्यमित्त्वमयासि । अया नो यज्ञं वहास्यया नो धेहि भेषजꣳ स्वाहा ॥ इदमग्नये अयसे इदन्न मम ॥ ६ ॥

ओं उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमं श्रथाय । अथा वयमादित्यव्रते तवानागसो अदितये स्याम स्वाहा । इदं वरुणायाऽऽदित्यायाऽदितये च इदन्न मम ॥ ७ ॥

ओं भवतन्नः समनसौ सचेतसावरेपसौ । मा यज्ञᳬहिᳬसिष्टं मा यज्ञपतिं जातवेदसौ शिवौ भवतमद्य नः स्वाहा । इदं जातवेदोभ्यां, इदन्न मम ॥ ८ ॥

निम्नलिखित मन्त्रों से बालक विशेष शाकल्य की आहुति दे ।–

ओं भूर्भुवः स्वः । अग्न आयूंषि पवस आसुवोर्ज्जमिषं च नः । आरे बाधस्व दुच्छुनां स्वाहा ॥ इदमग्नये पवमानाय-इदन्न मम ॥ १ ॥

ओं भूर्भुवः स्वः । अग्नि ऋषिः पवमानः पाञ्चजन्यः पुरोहितः । तमीमहे महागयं स्वाहा ॥ इदमग्नये पवमानाय-इदन्न मम ॥ २ ॥

ओं भूर्भुवः स्वः । अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् । दधद्रयिं मयि पोषं स्वाहा ॥ इदमग्नये पवमानाय-इदन्न मम ॥ ३ ॥

ओं भूर्भुवः स्वः । प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ॥ इदं प्रजापतये, इदन्न मम ॥ ४ ॥

और इन मन्त्रों से बालक घृत की आहुति दे :—

ओं अग्ने व्रतपते व्रतं चरिष्यामि तत्ते प्रब्रवीमि तच्छकेयम् । तेनर्ध्यासमिदमहमनृतात् सत्यमुपैमि स्वाहा । इदमग्नये, इदन्न मम ॥ १ ॥

ओं वायो व्रतपते व्रतं चरिष्यामि तत्ते प्रब्रवीमि तच्छकेयम् । तेनर्ध्यासमिदमहमनृतात् सत्यमुपैमि स्वाहा । इदं वायवे—इदन्न मम ॥ २ ॥

ओं सूर्य व्रतपते व्रतं चरिष्यामि तत्ते प्रब्रवीमि तच्छकेयम् । तेनर्ध्यासमिदमहमनृतात् सत्यमुपैमि स्वाहा । इदं सूर्याय—इदन्न मम ॥ ३ ॥

ओं चन्द्र व्रतपते व्रतं चरिष्यामि तत्ते प्रब्रवीमि तच्छकेयम् । तेनर्ध्यासमिदमहमनृतात सत्यमुपैमि । इदं चन्द्राय—इदन्न मम ॥ ४ ॥

ओं व्रतानां व्रतपते व्रतं चरिष्यामि तत्ते प्रब्रवीमि तच्छकेयम् । तेनर्ध्यासमिदमहमनृतात सत्यमुपैमि स्वाहा । इदमिन्द्राय, व्रतपतये इदन्न मम ॥ ५ ॥

ओं भूरग्नये स्वाहा । इदमग्नये, इदन्न मम ॥ ६ ॥

ओं भुवर्वायवे स्वाहा । इदं वायवे, इदन्न मम ॥ ७ ॥

ओं स्वरादित्याय स्वाहा । इइदमादित्याय, इदन्न मम ॥ ८ ॥

ओं भूर्भुवः स्वरग्नि वाय्वादित्येभ्यः ।स्वाहा । इदमग्निवाय्वादित्येभ्यः, इदन्न मम ॥ ९ ॥

ओं यदस्य कर्मणोऽत्यरीरिचं यद्वान्यूनमिहाकरम् । अग्निष्टत् स्विष्टकृद् विद्यात्सर्वं स्विष्टं सुहुतं करोतु मे । अग्नये स्विष्टकृते सुहुतहुते सर्व प्रायश्चित्ताहुतीनां कामानां समर्द्धयित्रे सर्वान्नः कामान्समर्द्धय स्वाहा ॥ इदमग्नये स्विष्टकृते, इदन्न मम ॥ १० ॥

ओं प्रजापतये स्वाहा । इदं प्रजापतये, इदन्न मम ॥ ११ ॥

## [ १४ वीं क्रिया—बालक परिचय ]

आचार्य :—( उत्तर दिशा में पूर्वाभिमुख और बालक के सामने पश्चिमाभिमुख बैठकर) बालक की ओर देख कर मंत्र पढ़े:—

ओं आगन्त्रा समगन्महि प्रसुमर्त्यं युयोतन । अरिष्टाः संचरेमहि स्वस्ति चरतादयम् ॥

बालक :—ओं ब्रह्मचर्यमागामुपमानयस्व ।

आचार्य :—को नामासि ?

बालक :—एतन्नामास्मि*

---

* जैसे 'यज्ञदत्त नामास्मि' । अपने नाम के आगे 'नामास्मि' शब्द कहे ।

## [ १५ वीं क्रिया-१ ली जलाञ्जलि ]

निम्नलिखित मंत्र बोलकर बालक को दक्षिण हस्ताञ्जलि शुद्ध जल से भर कर अपनी भी पानी से भर कर—

आचार्यः—ओं आपोहिष्ठा मयोभुवस्ता न ऊर्जे दधातन । महेरणाय चक्षसे ॥ १ ॥

ओं यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशती रिव-मातरः ॥ २ ॥

ओं तस्मा अरंगमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा चनः ॥ ३ ॥

निम्नलिखित मंत्र पढ़कर अपने हाथ का पानी बालक के हाथ में छोड़ के बालक का हाथ अँगूठे सहित पकड़ कर—

ओं तत्सवितु र्वृणीमहे वयं देवस्य भोजनम् । श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहि ॥

निम्नलिखित मंत्र पढ़कर हाथ का पानी नीचे थाली या परात में छुड़वा देवे ।

ओं देवस्य त्वा सवितुः प्रसवेऽश्विनो र्बाहुभ्यां पूष्णो हस्ताभ्यां हस्तं गृह्णाम्यसौ* ॥

## [ १६ वीं क्रिया-दुबारा जलाञ्जलि ]

निम्नलिखित मंत्र बोलकर बालक की दक्षिण हस्ताञ्जलि शुद्ध जल से भर कर अपनी भी पानी से भर कर—

---

* यहां बालक का नाम सम्बोधनान्त कहे यथा 'गृह्णामि देवदत्त !'

आचार्यः—ओं आपोहिष्ठा मयोभुवस्ता न ऊर्ज्जे दधातन। महेरणाय चक्षसे ॥ १ ॥

ओं यो वः शिवतमो रस स्तस्य भाजयतेहनः। उशती रिव-मातरः ॥ २ ॥

ओं तस्मा अरंगमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा चनः ॥ ३ ॥

निम्नलिखित मंत्र पढ़कर अपने हाथ का पानी बालक के हाथ में छोड़ के बालक का हाथ अंगूठे सहित पकड़ कर—

ओं तत्सवितु र्वृणीमहे वयं देवस्य भोजनम्। श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहि ॥

निम्नलिखित मंत्र पढ़कर हाथ का पानी नीचे थाली या परात में छुड़वा देवे।

ओं सविता ते हस्तमग्रभीत्, असौ* ।

## [ १७ वीं क्रिया—तिबारा जलाञ्जलि ]

निम्नलिखित मंत्र बोलकर बालक की दक्षिण हस्ताञ्जलि शुद्ध जल से भर कर अपनी भी पानी से भर कर—

आचार्यः—ओं आपोहिष्ठा मयोभुवस्ता न ऊर्ज्जे दधातन। महेरणाय चक्षसे ॥ १ ॥

ओं यो वः शिवतमो रसस्तस्य भाजयतेहनः। उशती रिव-मातरः ॥ २ ॥

---

* पहिली तरह से ही बालक का सम्बोधनान्त नाम ले यथा 'हस्त-मग्रभीत देवदत्त !'

ओं तस्मा अरंगमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा चनः ॥ ३ ॥

निम्नलिखित मंत्र पढ़कर अपने हाथ का पानी बालक के हाथ में छोड़ के बालक का हाथ अंगूठे सहित पकड़ कर—

ओं तत्सवितु र्वृणीमहे वयं देवस्य भोजनम् । श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहि ॥

निम्नलिखित मंत्र पढ़कर हाथ का पानी नीचे थाली या परात में छुड़वा देवे ।

ओं अग्निराचार्यस्तव, असौ * ।

## [ १८ वीं क्रिया—सूर्य दर्शन ]

आचार्यः—( बालक सहित सूर्य के सामने खड़े होकर )

निम्नलिखित मंत्र पढ़कर बालक को सूर्य दर्शन करावे ।

ओं देव सवित रेष ते ब्रह्मचारी ते गोपाय समामृत ॥ १ ॥

ओं तच्चक्षु र्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतं जीवेम शरदः शतꣳ शृणुयाम शरदः शतं प्रब्रवाम शरदः शतम-दीनाः स्याम शरदः शतं भूयश्च शरदः शतात् ॥ २ ॥

## [ १९ वीं क्रिया—आचार्य प्रदक्षिणा ]

आचार्यः—यज्ञ मण्डप में आकर उत्तर में बैठकर ।

निम्नलिखित मंत्र पढ़े ।

---

* पहिली तरह से ही बालक का सम्बोधनान्त नाम ले यथा 'तव देवदत्त !' ।

ओं युवा सुवासाः परिवीत आगात् स उ श्रेयान् भवति जायमानः। ओं सूर्यस्याव्रतमन्वावर्त्तस्व असौ* ।

बालक—आचार्य की प्रदक्षिणा करके उस के सामने बैठे।

## [ २० वीं क्रिया—अङ्गस्पर्श ]

आचार्य, अपने दक्षिण हाथ से बालक का दक्षिण कन्धा छुये। फिर अपने हाथ को बालक के दुपट्टे से ढक कर—

ओं प्राणानां ग्रन्थिरसि मा विस्रसोऽन्तक इदं ते परिददामि, अमुम्* ॥

ओं अहुर इदं ते परिददामि, अमुम्* ॥ मंत्र से बालक के उदर का स्पर्श।

ओं कृशन इदं ते परिददामि, अमुम्* ॥ मंत्र से बालक के हृदय का स्पर्श।

ओं प्रजापतये त्वा परिददामि, असौ* ॥ मंत्र से बालक के दक्षिण स्कन्ध का स्पर्श

ओं देवाय त्वा सवित्रे परिददामि, असौ* ॥ मंत्र से वाम हाथ से बालक के वाम स्कन्ध का स्पर्श करके बालक के हृदय पर हाथ रखकर। निम्नलिखित मंत्र पढ़े।

ओं तं धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तः ॥

---

* 'असौ' तथा 'अमुं' दोनों स्थानों पर बालक का नाम 'सम्बोधनान्त' तथा 'द्वितीयान्त' उच्चारण करे। यथा—'देवदत्त !' 'देवदत्तम्'।

२

## [ २१ वीं क्रिया—प्रतिज्ञा ]

एक दूसरे के दक्षिण हृदय पर, दक्षिण हाथ रखकर—

आचार्य तथा बालक—ओं मम व्रते ते हृदयं दधामि मम चित्तमनुचित्तं ते अस्तु। मम वाचमेकमना जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यम्।

अर्थ :—आचार्य—हे बालक तेरे हृदय को मैं अपने आधीन करता हूं। तेरा चित्त मेरे चित्त के अनुकूल सदा रहे और तू मेरी वाणी को एकाग्र मन हो प्रीति से सुनकर मेरे उपदेशानुसार कार्य कर। बृहस्पति परमात्मा आज से तुझ को मेरा अनुगामी बनाये।

शिष्य—हे आचार्य! उत्तम शिक्षा और विद्या की उन्नति के लिये मेरा हृदय आप के हृदय के आधीन रहे। मेरा मन आप के मन के अनुकूल सदा रहे। आप मेरे कथन को एकाग्रमन हो सुनिये। परमात्मा मुझे आज से आप का अनुगामी बनाये।

## [ २२ वीं क्रिया—आशीर्वाद ]

आचार्य :—को नामाऽसि

बालक :—अहम्भोः 'एतन्नामास्मि*।

आचार्य :—कस्य ब्रह्मचार्यसि।

बालक :—भवत :

आचार्य :—इन्द्रस्य ब्रह्मचार्य्यस्यग्निराचार्यस्तवाहमाचार्यस्तव असौ† ॥

ओं कस्य ब्रह्मचार्यसि प्राणस्य ब्रह्मचार्यसि कस्त्वा कमुपनयते काय त्वा परिददामि ॥ १ ॥ ओं प्रजापतये त्वा परिददामि। देवाय त्वा सवित्रे परिददामि। अद्भ्यस्त्वौषधीभ्यः परिददामि। द्यावापृथिवीभ्यां त्वा परिददामि विश्वेभ्यस्त्वा देवेभ्यः परिददामि। सर्वेभ्यस्त्वा भूतेभ्यः परिददाम्यरिष्ट्यै ॥

---

* 'देवदत्त नामास्मि'। † देवदत्त !

## ( वेदारम्भ अथवा सावित्री मंत्र पाठ )

### [ २३ वीं क्रिया—अग्नि संचय और वेदी प्रदक्षिणा ]

निम्नलिखित मंत्र पढ़ कर बालक वेदी की अग्नि को इकट्ठा करे और वेदी की प्रदक्षिणा करे।

बालक :—ओं अग्ने: सुश्रवः सुश्रवसं मां कुरु। ओं यथा त्वमग्ने सुश्रवः सुश्रवा असि। ओं एवं मां सुश्रवः सौश्रवसं कुरु। ओं यथा त्वमग्ने देवानां यज्ञस्य निधिपा असि। ओं एवमहं मनुष्याणां वेदस्य निधिपो भूयासम्॥

### [ २४ वीं क्रिया—वेदी के चारों ओर जल छिड़कना ]

बालक :—ओं अदितेऽनु मन्यस्व। इससे पूर्व,
ओं अनुमतेऽनुमन्यस्व। इससे पश्चिम,
ओं सरस्वत्यनुमन्यस्व। इससे उत्तर,
ओं देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय दिव्यो गन्धर्वः केतपूः केतन्नः पुनातु वाचस्पति र्वाचन्नः स्वदतु। इससे चारों ओर जल छिड़क कर दक्षिण में उत्तराभिमुख खड़ा होकर

### [ २५ वीं क्रिया—तीन बार पढ़कर तीन समिधाहुति ]

निम्नलिखित मंत्र तीन बार पढ़कर तीन समिधाहुति दे।

बालक :—ओं अग्नये समिधमाहार्षं बृहते जातवेदसे। यथा त्वमग्ने समिधा समिध्यसऽएवमहमायुषा मेधया वर्चसा प्रजया पशुभि र्ब्रह्मवर्चसेन समिन्धे जीवपुत्रो ममाचार्यो मेधाव्य हमसान्य निराकरिष्णु र्यशस्वी तेजस्वी ब्रह्मवर्च स्व्यन्नादो भूयास थ्ं स्वाहा।

[ २६ वीं क्रिया–दुबारा अग्नि संचय तथा प्रदक्षिण ]

निम्नलिखित मंत्र पढ़ कर वेदी की अग्नि को इकट्ठा करे और वेदी की प्रदक्षिणा करे।

बालक :—ओं अग्ने: सुश्रव: सुश्रवसं मां कुरु। ओं यथा त्वमग्ने सुश्रव: सुश्रवा असि। ओं एवं मां सुश्रव: सौश्रवसं कुरु। ओं यथा त्वमग्ने देवानां यज्ञस्य निधिपा असि। ओं एवमहं मनुष्याणां वेदस्य निधिपो भूयासम्।

[ २७ वीं क्रिया–वेदी के चारों ओर जल छिड़कना ]

बालक :—ओं अदितेऽनु मन्यस्व। इससे पूर्व,
ओं अनुमतेऽनु मन्यस्व। इससे पश्चिम,
ओं सरस्वत्यनुमन्यस्व। इससे उत्तर,
ओं देव सवित: प्रसुव यज्ञ प्रसुव यज्ञपतिं भगाय दिव्यो गन्धर्व: केतपू: केतन्न: पुनातु वाचस्पति र्वाचन्न: स्वदतु। इससे चारों ओर जल छिड़क कर दक्षिण में उत्तराभिमुख खड़ा होकर

[ २८ वीं क्रिया–अग्नि तापना ]

बालक :—पश्चिम में पूर्वाभिमुख बैठ के, थोड़ा सा जल लेकर दोनों हाथ तपावे और निम्नलिखित मंत्र पढ़े :—

ओं तनूपा अग्नेऽसि तन्वं मे पाहि ॥ १ ॥
ओं आयुर्दा अग्नेऽस्यायुर्मे देहि ॥ २ ॥
ओं वर्चोदा अग्नेऽसि वर्चो मे देहि ॥ ३ ॥
ओं अग्ने यन्मे तन्वा ऊनन्तन्म आपृण ॥ ४ ॥
ओं मेधां मे देव: सविता आदधातु ॥ ५ ॥
ओं मेधां मे देवी सरस्वती आदधातु ॥ ६ ॥
ओं मेधां मे अश्विनौ देवावाधत्तां पुष्करस्रजौ ॥ ७ ॥

## [ २६ वीं क्रिया—अङ्गस्पर्श ]

बालक :—ओं वाङ् म आप्यायताम्। इससे मुख,
ओं प्राणश्च म आप्यायताम्। इससे नासिका,
ओं चक्षुश्च म आप्यायताम्। इससे नेत्र,
ओं श्रोत्रञ्च म आप्यायताम्। इससे कान,
ओं यशोवलञ्च म आप्यायताम्। इससे बाहु स्पर्श करे।

## [ ३० वीं क्रिया—प्रार्थना ]

बालक :—ओं मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु। मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधातु। मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु। यत्ते अग्ने तेजस्तेनाहं तेजस्वी भूयासम्। यत्ते अग्ने वर्चस्तेनाहं वर्चस्वी भूयासम्। यत्ते अग्ने हरस्तेनाहं हरस्वी भूयासम्॥ मंत्र पढ़कर।

## [ ३१ वीं क्रिया—गायत्री उपदेश ]

बालक :—उत्तर में जाकर घुटने टेक आचार्य के सम्मुख पश्चिमाभिमुख बैठकर :—

अधीहि 'भूः सावित्रीं भो अनुब्रूहि'।

आचार्य :—दुपट्टे को अपने तथा बालक के कन्धे पर रखके और बालक के दोनों हाथ की अंगुलियों को पकड़ कर

आचार्य और बालक प्रथम वार :—ओं भूर्भवः स्वः। तत् सवितु र्वरेण्यम्।

द्वितीय वार :—ओं भूर्भवः स्वः। तत् सवितु र्वरेण्यं भर्गो देवस्य धीमहि।

तृतीय वार :—ओं भूर्भुवः स्वः। तत् सवितु र्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात् ॥

मंत्रार्थ

आचार्य :—(ओ३म्) वह परमात्मा जिसका मुख्य नाम 'ओ३म्' है; जो (भूः) प्राणों का भी प्राण, (भुवः) सब दुखों से छुड़ाने हारा, (स्वः) सुख-स्वरूप और अपने उपासकों को सब सुख की प्राप्ति कराने हारा है, उस (सवितुः) सब जगत् की उत्पत्ति करने वाले, सूर्यादि प्रकाशकों के भी प्रकाशक समग्र ऐश्वर्य के दाता (देवस्य) कामना करने योग्य सर्वत्र विजय कराने हारे परमात्मा का जो (वरेण्यम्) अतिश्रेष्ठ ग्रहण और ध्यान करने योग्य (भर्गः) सब क्लेशों को भस्म करने हारा पवित्र शुद्ध स्वरूप है (तत्) उसको हम लोग (धीमहि) धारण करें। (यः) परमात्मा (नः) हमारी (धियः) बुद्धियों को (प्रचोदयात्) उत्तम गुण कर्म स्वभावों में प्रेरित करे।

## [ ३२ वीं क्रिया–पुनः प्रतिज्ञा ]

आचार्य तथा बालक :—एक दूसरे के दक्षिण हृदय पर दक्षिण हाथ रख के :—

ओं मम व्रते ते हृदयं दधामि मम चित्तमनु चित्तं ते अस्तु। मम वाचमेकमना जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यम्।

## [ ३३ वीं क्रिया–मेखला धारण ]

निम्नलिखित मंत्र आचार्य पढ़कर मेखला को बालक की कमर में बांधे।

आचार्य :—ओं इयं दुरुक्तं परिबाधमाना वर्णं पवित्रं पुनती म आगात्। प्राणापानाभ्यां बलमादधाना स्वसा देवी सुभगा मेखलेयम् ॥

## [ ३४ वीं क्रिया—दृष्टि पात ]

आचार्य :—शुद्ध वस्त्र पहिने हुये ब्रह्मचारी की ओर देख के यह मंत्र पढ़े।

ओं युवा सुवासाः परिवीत आगात् स उ श्रेयान् भवति जायमानः। तं धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तः॥

## [ ३५ वीं क्रिया— दण्ड धारण ]

आचार्य :—हाथ में दण्ड ले खड़ा रहे।

बालक :—आचार्य के सामने हाथ जोड़ खड़ा होकर यह मंत्र बोलकर आचार्य के हाथ से ले लेवे।

ओं यो मे दण्डः परापतद्वैहायसोऽधि भूम्याम्। पुनरादद आयुषे ब्रह्मणे ब्रह्मवर्चसाय॥

## [ ३६ वीं क्रिया—उपदेश ]

पिता :—( ब्रह्मचारी को उपदेश )

( ब्रह्मचार्यसि असौ* ) आज से तू ब्रह्मचारी है। ( अपोऽशान) भोजन के पूर्व तथा सन्ध्योपासनादि के समय आचमन अवश्य किया कर। ( कर्म कुरु ) सदा अच्छे काम किया कर। ( दिवा मा स्वाप्सीः ) दिन में न सो।

( आचार्याधीनो वेदमधीष्व ) वेद पाठ का अभ्यास नित्य कर और उनका अर्थ आचार्य की सहायता से मनन कर ( आचार्याधीनो भवान्यत्र धर्माचरणात् ) आचार्य के धर्म युक्त उपदेशों को सुन और उन पर चल पर उनकी बुरी बातों को न मान और न अधर्मयुक्त आचरण कर। ( क्रोधानृते वर्जय ) क्रोध न कर, झूठ न बोल।

---

* बालक का सम्बोधनान्त नाम यथा 'देवदत्त !'।

(मैथुनं वर्जय) कोई ऐसा काम न करो जिससे तुम्हारे शरीर को शक्ति घट जाय या तुम्हारा तेज नष्ट हो जाय। इसलिये स्त्रियों के साथ एकान्त में रहने, बातचीत करने, खेलने आदि का विचार न कर; सब को मा और बहिन के समान समझ और जब देखो उनसे मा और बहिन ही कह। बुरे लड़कों के साथ न रह। कुचेष्टायें न कर। पेशाब करने के अतिरिक्त और कभी उपस्थ इन्द्रिय को न छू। ऐसा करने से बहुत से रोग हो जाते हैं। (उपरि शय्यां वर्जय) खाट के बजाय तख्त पर सोने का अभ्यास कर। ढीली खाट पर सोने से शरीर बलहीन होता है। (कौशीलव गन्धाञ्जनानि वर्जय) नाच न देख, बालों की और कपड़ों की सजावट में समय न खो, बालों में तेल डालने का अभ्यास न कर। सादगी से रह (मांस रूक्षाहारं मद्यादिपानंच वर्जय) मांस, मदिरा आदि नशीली वस्तु तथा रूखा, सड़ा-गला, अति तीखा, खट्टा आदि भोजन न कर।

(गवाश्वहस्त्युष्ट्रादियानं वर्जय) बिना आवश्यकता के किसी सवारी की इच्छा न कर। जहां तक हो पैदल चलने का अभ्यासी हो।

(अत्यन्तं स्नानं भोजनं निद्रां जागरणं निन्दां लोभ मोह भय शोकान् वर्जय) अधिक स्नान अधिक भोजन न कर, अधिक न सो, न अधिक रात में देर तक जाग। किसी की निन्दा न कर, लोभी न बन, घर का या और किसी वस्तु का मोह न कर, निडर बन, शोक न कर। (प्रतिदिनं रात्रेः पश्चिमे यामे चोत्थायावश्यकं कृत्वा दन्तधावन स्नान सन्ध्योपासनेश्वरस्तुति प्रार्थनो-पासना योगाभ्यासान्नित्यमाचर) प्रतिदिन प्रातःकाल ब्राह्म मुहूर्त्त में उठकर शौच दांतौन, स्नानादि से निवृत्त हो संन्ध्योपासन तथा व्यायामादि नित्य कर। (अन्तर्ग्रामनिवासोपानच्छत्रधारणम्)

पाठशाला में रहो। इधर उधर नगर अथवा गांव की गलियों में व्यर्थ न घूमा कर। जूते तथा छाते का अभ्यासी न बन। (सुशीलो मितभाषी सभ्यो भव) सुशील बन, बकवादी न हो और सभा में बैठना सीख। (नित्यं युक्ताहार विहारवान् विद्योपार्जने च यत्नवान् भव) उचित रीति से बलवर्द्धक भोजन करते हुये, शारीरिक तथा नित्य समय पर सन्ध्योपासनादि शुभकर्म कर आत्मिक बल को बढ़ाते हुये, आचार्य के आधीन रह, विद्याभ्यासी बन।

## [ ३७ वीं क्रिया-भिक्षा ]

बालक :—यज्ञ कुण्ड की परिक्रमा करके झोली हाथ में ले, यज्ञ कुण्ड के पश्चिम भाग में खड़ा होके माता, पितादि जो देना चाहें, उन्हीं से 'मातर्मे भिक्षां देहि', 'पितर्मे भिक्षां देहि' वाक्य बोलकर जितनी आवश्यक हो भिक्षा मांगे और जो भिक्षा मिले आचार्य के सामने रखे।

आचार्य :—उस भिक्षा में से थोड़ी सी भिक्षा लेकर शेष सब बालक को दे देवे और बालक उसी भिक्षा का उस दिन भोजन करे।

## [ ३८ वीं क्रिया-आज्याहुति ]

आचार्य तथा बालक :—वेदी के पश्चिम भाग में पूर्वाभिमुख बैठ के :—

बालक :—ओं अग्नये स्वाहा ॥ इदमग्नये इदन्न मम ॥ १ ॥ वेदी के उत्तर भाग अग्नि में।

ओं सोमाय स्वाहा ॥ इदं सोमाय-इदन्न मम ॥ २ ॥ वेदी के दक्षिण भाग अग्नि में।

ओं प्रजापतये स्वाहा ॥ इदं प्रजापतये, इदन्न मम ॥ ३ ॥ वेदी के बीच में।

ओं इन्द्राय स्वाहा ॥ इदमिन्द्राय, इदन्न मम ॥ ४ ॥ वेदी के मध्य भाग में।

ओं भूरग्नये स्वाहा ॥ इदमग्नये, इदन्न मम ॥ ५ ॥

ओं भुवर्वायवे स्वाहा ॥ इदं वायवे, इदन्न मम ॥ ६ ॥

ओं स्वरादित्याय स्वाहा ॥ इदमादित्याय, इदन्न मम ॥ ७ ॥

ओं भूर्भुवः स्वरग्नि वाय्वादित्येभ्यः स्वाहा ॥ इदमग्निवाय्वादित्येभ्यः इदन्न मम ॥ ८ ॥

## [ ३९ वीं क्रिया-प्रति बार पढ़कर तीन समिधाहुति ]

बालक :—ओं अग्नये समिधमाहार्षं बृहते जातवेदसे। यथा त्वमग्ने समिधा समिध्यसऽएवमहमायुषा मेधया वर्चसा प्रजया पशुभि र्ब्रह्मवर्चसेन समिन्धे जीवपुत्रो ममाचार्यो मेधाव्यहमसान्यनिराकरिष्णुर्यशस्वी तेजस्वी ब्रह्मवर्चस्व्यन्नादो भूयासथंस्वाहा।

## [ ४० वीं क्रियाः—अङ्ग स्पर्श ]

बालक :—अग्नि में हाथ तपा—

ओं वाङ्मऽआस्येऽस्तु। इससे मुख,

ओं नसोर्मे प्राणोऽस्तु। इससे नासिका छिद्र,

ओं अक्ष्णोर्मे चक्षुरस्तु। इससे दोनों नेत्र,

ओं कर्णयो में श्रोत्रमस्तु। इससे दोनों कान,

ओं बाह्वोर्मे बलमस्तु। इससे दोनों बाहु,

ओं ऊर्वो र्मऽओजोऽस्तु। इससे जांघें,

ओं अरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सहसन्तु। सब शरीर स्पर्श कर—





## [ ४१ वीं क्रिया - स्थालीपाक ( भात ) आहुति ]

आचार्य तथा बालक :—भात में घृत मिलाकर एक एक मंत्र से एक २ आहुति—

ओं सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् । संनिमेधा मयासिषथ्ं स्वाहा । इदं सदसस्पतये–इदन्न मम ।। १ ।।

ओं तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो योनः प्रचोदयात् , स्वाहा । इदं सवित्रे—इदन्न मम ।। २ ।।

ओं ऋषिभ्यः स्वाहा । इदं ऋषिभ्यः—इदन्न मम ।। ३ ।।

ओं यदस्य कर्मणोऽत्यरीरिचं यद्वान्यूनमिहाकरम् । अग्निष्टत् स्विष्टकृद्विद्यात् सर्वं स्विष्टं सुहुतं करोतुमे । अग्नये स्विष्टकृते सुहुतहुते सर्वप्रायश्चित्ताहुतीनां कामानां समर्द्धयित्रे सर्वान्नः कामान्त्समर्द्धय स्वाहा । इदमग्नये स्विष्टकृते—इदन्न मम ।। ४ ।।

## [ ४२ वीं क्रिया–आज्याहुति ]

बालक :—तत्पश्चात् घृत की आहुति निम्नलिखित मंत्रों से देवे।

ओं भूरग्नये स्वाहा ।। इदमग्नये, इदन्न मम ।। १ ।।

ओं भुवर्वायवे स्वाहा ।। इदं वायवे, इदन्न मम ।। २ ।।

ओं स्वरादित्याय स्वाहा ।। इदमादित्याय, इदन्न मम ।। ३ ।।

ओं भुर्भुवः स्वरग्निवाय्वादित्येभ्यः स्वाहा ।। इदमग्नि वाय्वादित्येभ्यः, इदन्न मम ।। ४ ।।

ओं त्वन्नो अग्ने वरुणस्य विद्वान् देवस्य हेडोऽव यासिसीष्ठाः। यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्रमुमुग्ध्यस्मत् स्वाहा। इदमग्नीवरुणाभ्यां, इदन्न मम ।। ५ ।।

ओं स त्वन्नो अग्नेऽवमोभवोती नेदिष्ठो अस्या उषसो व्युष्टौ ।

अव यक्ष्व नो वरुणं रराणो वीहि मृडीकं सुहवो न एधि स्वाहा। इदमग्नी वरुणाभ्यां, इदन्न मम ॥ ६ ॥

ओं इमं मे वरुण श्रुधी हवमद्या च मृडय । त्वाम वस्युराचके स्वाहा । इदं वरुणाय, इदन्न मम ॥ ७ ॥

ओं तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेडमानो वरुणेह बोध्युरुशंस मान आयुः प्रमोषीः स्वाहा । इदं वरुणाय, इदन्न मम ॥ ८ ॥

ओं येते शतं वरुणये सहस्रं यज्ञियाः पाशा वितता महान्तः अद्यतेभिर्नो सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा । इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यः, इदन्न मम ॥ ९ ॥

ओं अयाश्चाग्नेऽस्यनभिशस्तिपाश्च सत्यमित्त्वमया असि । अया नो यज्ञं वहास्ययानो धेहि भेषजꣳ स्वाहा ॥ इदमग्नये अयसे इदन्न मम ॥ १० ॥

ओं उदुत्तमं वरुणपाश मस्मदवाधमं विमध्यमं श्रथाय । अथा वयमादित्य व्रते तवानागसो अदितये स्याम स्वाहा । इदं वरुणा-याऽऽदित्यायाऽदितये च इदन्न मम ॥ ११ ॥

ओं भवतन्नः स मनसौ सचेतसावरेपसौ । मा यज्ञꣳहिꣳसिष्टं मा यज्ञपतिं जातवेदसौ शिवौ भवतमद्यनः स्वाहा । इदं जातवेदोभ्यां, इदन्न मम ॥ १२ ॥

## [ ४३ वीं क्रिया--वामदेव्यगान ]

आचार्य तथा बालक :—

१ २ ३ १र २र ३ २ ३ १ २ ३
ओं भूर्भुवः स्वः । कया नश्चित्र आभुवदूती सदा वृधः

१ २ २ ३ १ २ ३ २
सखा । कया शचिष्ठया वृता ॥ १ ॥

१ २ ३ १र २र ३ १ २ ३
ओं भूर्भुवः स्वः। कस्त्वा सत्यो मदानां मंहिष्ठो मत्स-
१ २ ३ १ २ १ ३ १ २
दन्धसः। दृढा चिदारुजे वसु ॥ २ ॥

३ २ ३ २ ३ २ ३ २
ओं भूर्भुवः स्वः। अभीषुणः सखीनामविता जरितृणाम्।
३ १ २ ३ १ २
शतम्भवास्यूतये ॥ ३ ॥ महावामदेव्यम् ॥

## [ ४४ वीं क्रिया-अभिवादन ]

बालक—अमुक* गोत्रोत्पन्नोऽहं भो भवन्तमभिवादये। कह कर आचार्य को प्रणाम करे।

## [ ४५ वीं क्रिया-आशीर्वाद ]

आचार्य—आयुष्मान् विद्यावान् भव सौम्य ॥

सब लोग :—हे बालक ! त्वमीश्वर कृपया विद्वान् शरीरात्म-बलयुक्तः कुशली वीर्यवानरोगः सर्वाविद्या अधोत्यास्मान् दिदृक्षुः सन्नागम्याः।

## [ ४६ वीं क्रिया-हविष्य (भात) खाना ]

बालक :—यज्ञ से बचे हुये भात का तथा अन्य भिक्षा प्राप्त स्वादिष्ट पदार्थों का भोजन करे'

---

* अपने गोत्र का नाम लेकर।

इति



# सूचना

महर्षि श्री स्वामी दयानन्दजी सरस्वती कृत समस्त पुस्तकें केवल वे ही प्रामाणिक हैं, जो कि वैदिक-यन्त्रालय अजमेर द्वारा मुद्रित होती हैं। यह यन्त्रालय श्री स्वामीजी के करकमलों द्वारा ही स्थापित किया हुआ है। महर्षिजी की उत्तराधिकारिणी श्रीमती परोपकारिणी सभा इसकी अध्यक्षा है। यहीं पर महर्षिजी के समस्त हस्तलिखित ग्रन्थ सुरक्षित रक्खे हुये हैं, जिनसे मिलान कर ग्रन्थों का मुद्रण होता है। अतः जो महानुभाव श्री स्वामी दयानन्दजी सरस्वती कृत पुस्तकें, उसी वास्तविक रूप में जैसी कि महर्षिजी ने लिखी हैं, और जिनमें किसी प्रकार का परिवर्तन या परिवर्धन (अदल-बदल) नहीं किया गया है, खरीदना चाहते हैं, तो उन्हें चाहिये कि वे वैदिक-यन्त्रालय में छपी हुई पुस्तकें ही खरीदें। किसी अन्य संस्था द्वारा प्रकाशित या कहीं अन्यत्र मुद्रित हुई न खरीदें।

मैनेजर—

वैदिक-यन्त्रालय

अजमेर

महर्षि दयानन्द सरस्वती कृत

समस्त पुस्तकों के मिलने का पता—

मैनेजर

वैदिक-पुस्तकालय, अजमेर.